जन्माद्यस्य यतः ( ब्र० सू० १।१।२ ) इति द्वितीयसूत्रे ब्रह्म स्वरूपलक्षणतटस्थलक्षणाभ्यां न्यरूपि । तत्र स्वरूपान्तर्गतत्वे सति व्यावर्तकं स्वरूपलक्षणं 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।१।१ ) इत्यादिवेदान्तैः प्रतिपादितम् । तस्य सत्यज्ञानाद्यात्मकस्वरूपान्तर्गतत्वे सति व्यावर्तकत्वात् । तटस्थलक्षणं 'यतो वा इमानि' (तै० ३।१ ) इत्यादीनि वाक्यानि निरूपयन्ति जगज्जन्मादिकारणत्वेन । तदुक्तं विवरणे—

जगज्जन्मस्थितिध्वंसा यतः सिध्यन्ति कारणात् ।
तत्स्वरूपतटस्थाभ्यां लक्षणाभ्यां प्रदर्श्यते ॥ इति ।

'शास्त्रयोनित्वात्' ( ब्र० सू० १।१।३ ) इति तृतीयसूत्रे प्रथमवर्णकेन षष्ठीसमासमाश्रित्य सर्वज्ञत्वं प्रत्यपादि । द्वितीयवर्णकेन बहुव्रीहिसमासमभ्युपगम्य ब्रह्मणो वेदान्तप्रमाणकत्वं प्रत्यज्ञायि ।

'तत्तु समन्वयात्' ( ब्र० सू० १।१।४ ) इति चतुर्थे सूत्रे प्रथमवर्णकेन वेदान्तानां ब्रह्मणि तात्पर्यं प्रत्यपादि । द्वितीयवर्णकेन वेदान्तानां प्रतिपत्तिविधिशेषतया ब्रह्मप्रतिपादकत्वं प्रत्यक्षेपि । दिङ्मात्रमत्र प्रदर्शितम् । शिष्टं शास्त्र एव स्पष्टमिति सकलं समञ्जसम् । श्रीरस्तु ।

इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे सकलदर्शनशिरोलंकाररत्नं श्रीमच्छांकरदर्शनं समाप्तम् ॥ 

समाप्तोऽयं सर्वदर्शनसंग्रहः ।

॥ ॐ तत्सद्ब्रह्मणे नमः ॥

# अथ मधुसूदनसरस्वतीकृतः प्रस्थानभेदः ।

अथ सर्वेषां शास्त्राणां भगवत्येव तात्पर्यं साक्षात्परम्परया वेति समासेन तेषां प्रस्थानभेदोऽत्रोद्दिश्यते । तथाहि—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति वेदाश्चत्वारः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति वेदाङ्गानि षट् । पुराणन्यायमीमांसा धर्मशास्त्राणि चेति चत्वार्युपाङ्गानि । अत्रोपपुराणानामपि पुराणेऽन्तर्भावः । वैशेषिकशास्त्रस्य न्याये । वेदान्तशास्त्रस्य मीमांसायाम् । महाभारतरामायणयोः सांख्यपातञ्जलपाशुपतवैष्णवादीनां च धर्मशास्त्रे । मिलित्वा चतुर्दश विद्याः । तथा चोक्तं याज्ञवल्क्येन (१. ३.)—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति ।

एता एव चतुर्भिरुपवेदैः सहिता अष्टादश विद्या भवन्ति । आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रं चेति चत्वार उपवेदाः । सर्वेषां चाऽऽस्तिकानामेतावन्त्येव शास्त्रप्रस्थानानि । अन्येषामप्येकदेशिनामेतेष्वेवान्तर्भावात् ।

ननु नास्तिकानामपि प्रस्थानान्तराणि सन्ति तान्येतेष्वनन्तर्भावात्पृथग्गणयितुमुचितानि । तथाहि—शून्यवादेनैकं प्रस्थानं माध्यमिकानाम् । क्षणिकविज्ञानमात्रवादेनान्यद्योगाचाराणाम् । ज्ञानाकारानुमेयक्षणिकबाह्यार्थवादेनापरं सौत्रान्तिकानाम् । प्रत्यक्षसलक्षणक्षणिकबाह्यार्थवादेनापरं वैभाषिकाणाम् । एवं सौगतानां प्रस्थानचतुष्टयम् । तथा देहात्मवादेनैकं प्रस्थानं चार्वाकाणाम् । एवं देहातिरिक्तदेहपरिमाणात्मवादेन द्वितीयं प्रस्थानं दिगम्बराणाम् । एवं मिलित्वा नास्तिकानां षट् प्रस्थानानि तानि कस्मान्नोच्यन्ते । सत्यम् । वेदबाह्यत्वात्तेषां म्लेच्छादिप्रस्थानवत्परम्परयाऽपि पुरुषार्थानुपयोगित्वादुपेक्षणीयत्वमेव । इह तु साक्षाद्वा परम्परया वा पुरुषार्थोपयोगिनां वेदोपकरणानामेव प्रस्थानानां भेदो दर्शितः । ततो न न्यूनत्वशङ्कावकाशः । अथ संक्षेपेणैषां प्रस्थानानां स्वरूपभेदहेतुप्रयोजनभेद उच्यते बालानां व्युत्पत्तये ।

तत्र धर्मब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्यं वेदः । स च मन्त्रब्राह्मणात्मकः । तत्र मन्त्रा अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशकाः । तेऽपि त्रिविधाः ।

---

१ ख. °णेष्वन्त° । २ ख. °क्षस्वल° । ३ ग. °द्यायति° । ४ ग. °रिणामात्म° । ५ क.—°यमे° । ६ ग. °प्रकार° । ७ ग. °भेदे हे° । ८ ख. °हेतु प्र° ।

ऋग्यजुःसामभेदात् । तत्र पादबद्धगायत्र्यादिच्छन्दोविशिष्टा ऋचः 'अग्निमीळे पुरोहितम्' इत्याद्याः । ता एव गीतिविशिष्टाः सामानि । तदुभयविलक्षणानि यजूंषि । अग्नीदग्नीन्विहरेत्यादिसंबोधनरूपा निगदमन्त्रा अपि यजुरन्तर्भूता एव । तदेवं निरूपिता मन्त्राः ।

ब्राह्मणमपि त्रिविधम् । विधिरूपमर्थवादरूपं तदुभयविलक्षणरूपं च । तत्र शब्दभावनाविधिरिति भाट्टाः । नियोगो विधिरिति प्राभाकराः । इष्टसाधनता विधिरिति तार्किकादयः सर्वे । विधिरपि चतुर्विधः । उत्पत्त्यधिकारविनियोगप्रयोगभेदात् । तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिराग्नेयोऽष्टाकपालो भवतीत्यादिः । सेतिकर्तव्यताकस्य करणस्य यागादेः फलसंबन्धबोधको विधिरधिकारविधिर्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिः । अङ्गसंबन्धबोधको विधिर्विनियोगविधिर्व्रीहिभिर्यजेत समिधो यजतीत्यादिः । साङ्गप्रधानकर्मप्रयोगैक्यबोधकः पूर्वोक्तविधित्रयमेलनरूपः प्रयोगविधिः । स च श्रौत इत्येके । कल्प्य इत्यपरे । कर्मस्वरूपं च द्विविधम् । गुणकर्मार्थकर्म च । तत्र क्रतुकर्मकारकाण्याश्रित्य विहितं गुणकर्म । तदपि चतुर्विधम् । उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात् । तत्र वसन्ते ब्राह्मणोऽग्नीनादधीत यूपं तक्षतीत्यादावाधानतक्षणादिना संस्कारविशेषविशिष्टाग्नियूपादेरुत्पत्तिः । स्वाध्यायोऽध्येतव्यो गां पयो दोग्धीत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपयःप्रभृतेः प्राप्तिः । सोममभिषुणोति व्रीहीनवहन्त्याज्यं विलापयतीत्यादावभिषवावघातविलापनैः सोमादीनां विकारः । व्रीहीन्प्रोक्षति पत्न्यवेक्षत इत्यादौ प्रोक्षणावेक्षणादिभिर्व्रीह्यादिद्रव्याणां संस्कारः । एतच्चतुष्टयं चाङ्गमेव । तथा क्रतुकारकाण्याश्रित्य विहितमर्थकर्म च द्विविधम् । अङ्गं प्रधानं च । अन्यार्थमङ्गम् । अनन्यार्थं प्रधानम् । अङ्गमपि द्विविधम् । संनिपत्योपकारकमारादुपकारकं च । तत्र प्रधानस्वरूपनिर्वाहकं प्रथमम् । फलोपकारि द्वितीयम् । एवं संपूर्णाङ्गसहितो विधिः प्रकृतिः । विकलाङ्गसंयुक्तो विधिर्विकृतिः । तदुभयविलक्षणो विधिर्दर्विहोमः । एवमन्यदप्यूह्यम् । तदेवं निरूपितो विधिभागः । प्राशस्त्यनिन्दान्यतरलक्षणया विधिविशेषभूतं वाक्यमर्थवादः । स च त्रिविधः । गुणवादोऽनुवादो भूतार्थवादश्चेति । तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवाद

---

१ ग भाट्टा । २ ग °ति प्रभा° । ३ ख प्रस्थानप्र° । ४ ख उत्पाद्याऽऽप्य° । ५ ख °मं तद्द्विवि° । ६ ख °कभेदमा° । ७ ख °कारकं द्वि° । ८ ख °ङ्गसयुक्तो वि° । ९ ख °धिविभा° । १० ग °याया वि° । ११ ख ग °धिराप° ।

आदित्यो यूप इत्यादिः । प्रमाणान्तरप्राप्तार्थबोधकोऽनुवादोऽग्निर्हिमस्य भेषजमित्यादिः । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवाद इन्द्रो वृत्राय वज्रमुदयच्छदित्यादिः । तदुक्तम्—

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति ।

तत्र त्रिविधानामप्यर्थवादानां विधिस्तुतिपरत्वे समानेऽपि भूतार्थवादानां स्वार्थेऽपि प्रामाण्यं देवताधिकरणन्यायात् । अबाधिताज्ञातज्ञापकत्वं हि प्रामाण्यम् । तच्चाबाधितविषयत्वादज्ञातज्ञापकत्वाच्च न गुणवादानुवादयोः । भूतार्थस्य तु स्वार्थे तात्पर्यरहितस्याप्यौत्सर्गिकं प्रामाण्यं विहन्यते । तदेवं निरूपितोऽर्थवादभागः । विध्यर्थवादोभयविलक्षणं तु वेदान्तवाक्यम् । तच्चाज्ञातज्ञापकत्वेऽप्यनुष्ठानाप्रतिपादकत्वान्न विधिः । स्वतः पुरुषार्थपरमानन्दज्ञानात्मकब्रह्मणि स्वार्थे उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतः प्रमाणभूतं सर्वानपि विधीनन्तःकरणशुद्धिद्वारा स्वविशेषतामापादयदन्यशेषत्वाभावाच्च । तस्मादुभयविलक्षणमेव वेदान्तवाक्यम् । तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते । क्वचिद्विधिपदरहितप्रमाणवाक्यत्वेन भूतार्थवाद इति व्यवह्रियत इति न दोषः । तदेवं निरूपितं त्रिविधं ब्राह्मणम् ।

एवं च कर्मकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः । स च प्रयोगत्रयेण यज्ञनिर्वाहार्थमृग्यजुःसामभेदेन भिन्नः । तत्र हौत्रप्रयोग ऋग्वेदेन, आध्वर्यवप्रयोगो यजुर्वेदेन, औद्गात्रप्रयोगः सामवेदेन । ब्राह्मयाजमानप्रयोगौ त्वत्रैवान्तर्भूतौ । अथर्ववेदस्तु यज्ञानुपयुक्तः शान्तिकपौष्टिकाभिचारादिकर्मप्रतिपादकत्वेनात्यन्तविलक्षण एव । एवं प्रवचनभेदात्प्रतिवेदं भिन्ना भूयस्यः शाखाः । एवं च कर्मकाण्डे व्यापारभेदेऽपि सर्वासां वेदशाखानामेकरूपत्वमेव ब्रह्मकाण्डे ।

इति चतुर्णां वेदानां प्रयोजनभेदेन भेद उक्तः । अथाङ्गान्युच्यन्ते । तत्र शिक्षाया उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यञ्जनात्मकवर्णोच्चारविशेषज्ञानं प्रयोजनम् । तदभावे मन्त्राणामनर्थकत्वात् । तथा चोक्तम्—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् (शि० ५२) इति ।

---

१ ग °न्द्रो वज्रहस्त पुरंदर । त° । २ ग °नास्तु° । ३ ग तच वा° । ४ ग° °र्थवादस्य । ५ ग. स्वार्थे° । ६ ग °भूतार्थवाद० । त° । ७ ग °सर्वेदानीय । ८ ख ग °शाखाः । ९ ग. °पत्वेव ब्रह्मकाण्डमिति । १० ग इत्यस्य प्रयोजनम्° ।

तत्र सर्ववेदसाधारणी शिक्षा । अथ शिक्षां प्रवक्ष्यामीत्यादिपञ्चखण्डात्मिका पाणिनिना प्रकाशिता । प्रतिवेदशाखं च भिन्नरूपा प्रातिशाख्यसंज्ञिताऽन्यैरेव मुनिभिः प्रदर्शिता । एवं वैदिकपदसाधुत्वज्ञानेनोहादिकं व्याकरणस्य प्रयोजनम् । तच्च वृद्धिरादैजित्याद्यध्यायाष्टकात्मकं महेश्वरप्रसादेन भगवता पाणिनिनैव विरचितम् । पाणिनीयसूत्रेषु कात्यायनेन मुनिना वार्तिकं विरचितम् । तद्वार्तिकस्योपरि च भगवता पतञ्जलिना महाभाष्यमारचि । तदेतत्त्रिमुनि व्याकरणं वेदाङ्गं माहेश्वरमित्याख्यायते । कौमारादिव्याकरणानि तु न वेदाङ्गानि किंतु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगन्तव्यम् ।

एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणपदसाधुत्वे ज्ञाते वैदिकमन्त्रपदानामर्थज्ञानाकाङ्क्षायां तदर्थं भगवता यास्केन समाम्नायः समाम्नातः, स व्याख्यातव्य इत्यादित्रयोदशाध्यायात्मकं निरुक्तमारचितम् । तत्र च नामाख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमन्त्रपदार्थानामर्थः प्रकाशितः । मन्त्राणां चानुष्ठेयार्थप्रकाशनद्वारेणैव करणत्वात्पदार्थज्ञानाधीनत्वाच्च वाक्यार्थज्ञानस्य मन्त्रस्थपदार्थज्ञानाय निरुक्तमवश्यमपेक्षितम् । अन्यथाऽनुष्ठानासंभवात् । सृण्येव जर्भरी तुर्फरी तू इत्यादिदुरूहाणां शब्दानां (निरु० १३–५) प्रकारान्तरेणार्थज्ञानस्यासंभवनीयत्वाच्च । एवं निघण्टवोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव । तत्रापि निघण्टुसंज्ञकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः ।

एवमृङ्मन्त्राणां पादबद्धच्छन्दोविशेषविशिष्टत्वात्तदज्ञाने च निन्दाश्रवणाच्छन्दोविशेषनिमित्तानुष्ठानविशेषविधानाच्च । छन्दोज्ञानाकाङ्क्षायां तत्प्रकाशनाय धीः श्रीः स्त्रीमित्याद्यष्टाध्यायात्मिका छन्दोविवृतिर्भगवता पिङ्गलेन विरचिता । तत्राप्यलौकिकमित्यन्तेनाध्यायत्रयेण गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगतीति सप्त च्छन्दांसि सावान्तरभेदानि निरूपितानि । अथ लौकिकमित्यारभ्याध्यायपञ्चकेन पुराणेतिहासादावुपयोगीनि लौकिकानि च्छन्दांसि प्रसङ्गान्निरूपितानि व्याकरणे लौकिकपदनिरूपणवत् ।

एवं वैदिककर्माङ्गदर्शादिकालज्ञानाय ज्यौतिषं भगवताऽऽदित्येन गर्गादिभिश्च प्रणीतं बहुविधमेव ।

शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषज्ञानाय कल्पसूत्राणि । तानि च प्रयोगत्रयभेदात्त्रिविधानि । तत्र हौत्रप्रयोगप्रतिपादकान्याश्वलायनं-

१ ख °हापोहादि° । २ ख °सादादेव भ° । ३ ख °धुत्वज्ञाने वै° । ४ ख इत्यष्टाद° । ५ ख °ज्ञानस्य । ६ ग °घण्टुरपि । ७ ख °णा पद° । ८ ख °येणेति । ९ ख °व । एन शा° । १० ख. °न सांख्यय° । ग °नसाख्याय° । घ °नशाख्याय° ।

शाङ्खायनादिप्रणीतानि । आध्वर्यवप्रयोगप्रतिपादकानि बौधायनापस्तम्बका- त्यायनादिप्रणीतानि । औद्गात्रप्रयोगप्रतिपादकानि लाट्यायनद्राह्यायणादि- प्रणीतानि ।

एवं निरूपितः षण्णामङ्गानां प्रयोजनभेदः । चतुर्णामुपाङ्गानमधुनोच्यते । तत्र सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि पुराणानि । तानि च ब्राह्मं पाद्मं वैष्णवं शैवं भागवतं नारदीयं मार्क- ण्डेयमाग्नेयं भविष्यं ब्रह्मवैवर्तं लैङ्गं वाराहं स्कान्दं वामनं कौर्मं मात्स्यं गारुडं ब्रह्माण्डं चेत्यष्टादश ।

आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः ।
द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ॥
चतुर्थं शिवधर्माख्यं दौर्वासं पञ्चमं विदुः ।
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ॥
अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ।
ततो ब्रह्माण्डसंज्ञं तु वारुणाख्यं ततः परम् ॥
ततः कालीपुराणाख्यं वासिष्ठं मुनिपुंगवाः
ततो वासिष्ठं लैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ॥
ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम् ।
पाराशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ॥
भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकम् ।

एवमुपपुराणान्यनेकप्रकाराणि द्रष्टव्यानि ।

न्याय आन्वीक्षिकी पञ्चाध्यायी गौतमेन प्रणीता । प्रमाणप्रमेयसंशयप्रयोजन- दृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्था- नाख्यानां षोडशपदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानं तस्याः प्रयोजनम् । एवं दशाध्यायं वैशेषिकं शास्त्रं कणादेन प्रणीतम् । द्रव्यगुणकर्मसामान्यवि- शेषसमवायानां षण्णां पदार्थानामभावसप्तमानां साधर्म्यवैधर्म्याभ्यां व्युत्पा- दनं तस्य प्रयोजनम् । एतदपि न्यायपदेनोक्तम् ।

एवं मीमांसाऽपि द्विविधा । कर्ममीमांसा शारीरकमीमांसा च । तत्र द्वाद-

१ क. °द्राह्यायण° । २ ग. °यं नन्दिमे° । ३ ख. स्मृतम् । ४ क. वाशिष्टं । ५ क. घ. वाशिष्ठं । ६ ख. वाशिष्ठलैङ्गाख्यं । ७ ग. पराशरं । ८ ख. °क्तं ततो भागवतं परम् । ए° । ९ ख. निर्मितम् ।

शाध्यायी कर्ममीमांसा 'अथातो धर्मजिज्ञासा' इत्यादि 'अन्वाहार्ये च (१६) दर्शनात्' इत्यन्ता भगवता जैमिनिना प्रणीता। तत्र धर्मप्रमाणम्। धर्मभेदाभेदौ। शेषशेषिभावः। क्रत्वर्थपुरुषार्थभेदेन प्रयुक्तिविशेषः। श्रुत्यर्थपठनादिभिः क्रमभेदः। अधिकारविशेषः सामान्यातिदेशः। विशेषातिदेशः। ऊहः। बाधः। तन्त्रम्। प्रसङ्गश्चेति क्रमेण द्वादशाध्यायानामर्थाः। तथा संकर्षणकाण्डमप्यध्यायचतुष्टयात्मकं जैमिनिप्रणीतम्। तच्च देवताकाण्डसंज्ञया प्रसिद्धमप्युपासनाख्यकर्मप्रतिपादकत्वात्कर्ममीमांसान्तर्गतमेव। तथा चतुरध्यायी शारीरकमीमांसा 'अथातो ब्रह्मजिज्ञासा' इत्यादिरनावृत्तिः शब्दादित्यन्ता जीवब्रह्मैकत्वसाक्षात्कारहेतुःश्रवणाख्यविचारप्रतिपादकान्न्यायानुपदर्शयन्ती भगवता बादरायणेन कृता। तत्र सर्वेषामपि वेदान्तवाक्यानां साक्षात्परम्परया वा प्रत्यगभिन्नाद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्यायेन प्रदर्शितः। तत्र च प्रथमे पादे स्पष्टब्रह्मलिङ्गयुक्तानि वाक्यानि विचारितानि। द्वितीये त्वस्पष्टलिङ्गान्युपास्यब्रह्मविषयाणि तृतीये पादेऽस्पष्टब्रह्मलिङ्गानि प्रायशो ज्ञेयब्रह्मविषयाणि। एवं पादत्रयेण वाक्यविचारः समापितः। चतुर्थपादे तु प्रधानविषयत्वेन संदिह्यमानान्यव्यक्ताजादिपदानि चिन्तितानि। एवं वेदान्तानामद्वये ब्रह्मणि समन्वये सिद्धे तत्र संभावितस्मृतितर्कादिप्रयुक्तैस्तर्कैर्विरोधमाशङ्क्य तत्परिहारः क्रियत इत्यविरोधो द्वितीयाध्यायेन दर्शितः। तत्राऽऽद्यपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्तैस्तर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीये पादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितम्। स्वपक्षस्थापनपरपक्षनिवारणरूपपर्वद्वयात्मकत्वाद्विचारस्य। तृतीये पादे महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः पूर्वभागेण परिहृतः। उत्तरभागेण तु जीवविषयाणाम्। चतुर्थपादे त्विन्द्रियविषयश्रुतीनां विरोधः परिहृतः। तृतीयेऽध्याये साधननिरूपणम्। तत्र प्रथमे पादे जीवस्य परलोकगमनागमननिरूपणेन वैराग्यं निरूपितम्। द्वितीये पादे पूर्वभागेण त्वंपदार्थः शोधितः। उत्तरभागेण तत्पदार्थः। तृतीये पादे निर्गुणे ब्रह्मणि नानाशाखापठितपुनरुक्तपदोपसंहारः कृतः। प्रसङ्गाच्च सगुणनिर्गुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ निरूपितौ। चतुर्थे पादे निर्गुणब्रह्मविद्याया बहिरङ्गसाधनान्याश्रमयज्ञादीन्यन्तरङ्गसाधनानि शमदमनिदिध्यासनादीनि च निरूपितानि। चतुर्थेऽध्याये सगुणनिर्गुणविद्ययोः फलविशेषनिर्णयः कृतः। तत्र प्रथमे पादे

१ ग. °हार्ये च°। २ ख °दिना°। ३ ख °लिङ्गायु°। ४ ग. °ष्टब्रह्मलि°। ५ ख. °ण वि°। ६ ग. °ह्य सामान्य°। ७ ग. °कैश्च विरोधो। ८ ग. °स्मृत्यादि°। ९ ख. °रोधपरिहारः। तृ°। १० ग. °हारौ।

श्रवणाद्यावृत्त्या निर्गुणं ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणा जीव-न्मुक्तिरभिहिता । द्वितीये पादे म्रियमाणस्योत्क्रान्तिप्रकारश्चिन्तितः। तृतीये पादे सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः । चतुर्थे पादे पूर्वभागेण निर्गु-णब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता । उत्तरभागेण सगुणब्रह्मविदो ब्रह्मलोक-स्थितिरुक्तेति । इदमेव सर्वशास्त्राणां मूर्धन्यम् । शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयं श्रीशंकरभगवत्पादोदितप्रकारेणेति रहस्यम्।

एवं धर्मशास्त्राणि मनुयाज्ञवल्क्यविष्णुयमाङ्गिरोवसिष्ठदक्षसंवर्तशातातपपरा-शरगौतमशङ्खलिखितहारीतापस्तम्बोशनोव्यासकात्यायनबृहस्पतिदेवलनारदपै-ठीनसिप्रभृतिभिः कृतानि वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि । एवं व्यासकृतं महाभारतं वाल्मीकिकृतं रामायणं च धर्मशास्त्रे एवान्तर्भूतं स्वय-मितिहासत्वेन प्रसिद्धम् । सांख्यादीनां धर्मशास्त्रान्तर्भावेऽपीह स्वशब्देनैव निर्दे-शात्पृथगेव संगतिर्वाच्या ।

अथ वेदचतुष्टयस्य क्रमेण चत्वार उपवेदाः । तत्राऽऽयुर्वेदस्याष्टौ स्थानानि भवन्ति । सूत्रं शारीरमैन्द्रियं चिकित्सा निदानं विमानं विकल्पः सिद्धिश्चेति । ब्रह्मप्रजापत्यश्विधन्वन्तरीन्द्रभरद्वाजात्रेयाग्निवेश्यादिभिरुपदिष्टश्चरकेण संक्षिप्तः । तत्रैव सुश्रुतेन पञ्चस्थानात्मकं प्रस्थानान्तरं कृतम् । एवं वाग्भटादिनाऽपि बहुधेति न शास्त्रभेदः । कामशास्त्रमप्यायुर्वेदान्तर्गतमेव । तत्रैव सुश्रुतेन वाजी-करणाख्यकामशास्त्राभिधानात् । तत्र वात्स्यायनेन पञ्चाध्यायात्मकं कामशास्त्रं प्रणीतम् । तस्य च विषयवैराग्यमेव प्रयोजनम् । शास्त्रोद्दीपितमार्गेणापि विषयभोगे दुःखमात्रपर्यवसानात् । चिकित्साशास्त्रस्य रोगतत्साधनरोगनिवृ-त्तितत्साधनज्ञानं प्रयोजनम् ।

एवं धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः । तत्र प्रथमो दीक्षापादः । द्वितीयः संग्रहपादः । तृतीयः सिद्धिपादः । चतुर्थः प्रयोगपादः । तत्र प्रथमे पादे धनुर्लक्षणमधिकारिनिरूपणं च कृतम् । अत्र धनुःशब्दश्चापे रूढोऽपि धनुर्वि-धायुधे प्रवर्तते । तच्चतुर्विधम्—मुक्तममुक्तं मुक्तामुक्तं यन्त्रमुक्तम् । मुक्तं चक्रादि । अमुक्तं खड्गादि । मुक्तामुक्तं शल्यावान्तरभेदादि । यन्त्रमुक्तं शरादि । तत्र मुक्तमस्त्रमुच्यते । अमुक्तं शस्त्रमित्युच्यते । तदपि ब्राह्मवैष्णवपाशुपतप्राजा-पत्याग्नेयादिभेदादनेकविधम् । एवं साधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषामधिकारः क्षत्रियकुमाराणां तदनुयायिनां च ते सर्वे चतुर्विधाः पदाति-

१ ख. °ईं च स° । २ ख. °धुनाऽऽद° । ३ ग. °समप्य ए° । ४ ग. °त्रै शरी° । ५ ग. °प्रयत्था° । ६ ख. °हुविरेदोरी । ७ ग. °ननि° । ८ ख. °धनं इन्त्र° । ९ ग. °ति धर्तुर्वे° । १० ख °मुक्तं च मु° । ११ ग. °शस्त्रास्त्र° ।

रथगजतुरगारूढाः । दीक्षाभिषेकशकुनमङ्गलकरणादिकं च सर्वमपि प्रथमे पादे निरूपितम्[1] । सर्वेषां शस्त्रविशेषाणामाचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितो द्वितीयपादे । गुरुसम्प्रदायसिद्धानां[2] शस्त्रविशेषाणां पुनः पुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि निरूपितं तृतीयपादे । एवं देवतार्चनाभ्यासादिभिः सिद्धानामस्त्रविशेषाणां प्रयोगश्चतुर्थपादे निरूपितः । क्षत्रियाणां स्वधर्माचरणं[3] युद्धम् । दुष्टस्य[4] दण्डश्चोरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम् । एवं च ब्रह्मप्रजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनुर्वेदशास्त्रम् ।

एवं गान्धर्ववेदो[5] भगवता भरतेन प्रणीतः स गीतवाद्यनृत्यभेदेन बहुविधः । देवताराधनं निर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम् ।

एवमर्थशास्त्रमपि बहुविधम् । नीतिशास्त्रमश्वशास्त्रं शिल्पशास्त्रं सूपशास्त्रं चतुःषष्टिकलाशास्त्रं चेति । तत्सर्वं नानामुनिभिः प्रणीतम् । अस्य च सर्वस्य लौकिकप्रयोजनभेदो द्रष्टव्यः ।

एवमष्टादश विद्यास्त्रयीशब्देनोक्ताः[6] । अन्यथा न्यूनताप्रसङ्गात् । तथा सांख्यशास्त्रं भगवता कपिलेन प्रणीतम् । तच्च 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः[8]' इत्यादि षडध्यायम् । तत्र प्रथमेऽध्याये विषया निरूपिताः । द्वितीयेऽध्याये प्रधानकार्याणि । तृतीयेऽध्याये विषयेभ्यो वैराग्यम् । चतुर्थेऽध्याये विरक्तानां पिङ्गलाकुँवरादीनामाख्यायिकाः[7] । पञ्चमेऽध्याये परपक्षनिर्णयः । षष्ठेऽध्याये सर्वार्थसंक्षेपः । प्रकृतिपुरुषविवेकज्ञानं सांख्यशास्त्रस्य प्रयोजनम् ।

तथा योगशास्त्रं भगवता पतञ्जलिना प्रणीतम् । अथ योगानुशासनमित्यादि पादचतुष्टयात्मकम् । तत्र प्रथमे पादे चित्तवृत्तिनिरोधात्मकः समाधिरभ्यासवैराग्यरूपं च तत्साधनं निरूपितम् । द्वितीये पादे विक्षिप्तचित्तस्यापि समाधिसिद्ध्यर्थं यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टाङ्गानि निरूपितानि । तृतीये पादे योगविभूतयः[9] । चतुर्थे पादे कैवल्यमिति । तस्य च विजातीयप्रत्ययनिरोधद्वारेण निदिध्यासनसिद्धिः प्रयोजनम् ।

तथा पशुपतिमतं[10] पाशुपतं शास्त्रं पशुपतिना पशुपाशविमोक्षणाय 'अथातः पाशुपतं योगविधिं व्याख्यास्यामः' इत्यादि पञ्चाध्यायं विरचितम् । तत्राध्यायपञ्चकेनापि[11] कार्यरूपो[12] जीवः । पशुः कारणं पतिरीश्वरः । योगः[13] पशुपतौ चित्तसमाधानम् । विधिर्भस्मना त्रिषवणस्नानादिश्च निरूपितः । दुःखान्तसंज्ञो[14]

१ ख निरूपणम् । २ ख °ना शास्त्र° । ग °ना पु° । ३ ग °ण दु° । ४ ख ग °ष्टदस्युचोरा° । ५ ख °व गन्ध° । ६ ख °यीविद्याश° । ७ ख ग °ररादी° । ८ ख °त्तनिवृ° । ९ ख योगविकृत° । १० ख °त्र भगवता प° । ११ ख °वेन का° । १२ ख °व का° । १३ ख योगप° । १४ ग °न्तस° ।

## अथ-सर्वदर्शनसंग्रहान्तर्गतश्लोकश्रुतिसूत्रभाष्यादिवाक्य-ग्रन्थनामग्रन्थकारनामानुक्रमणिका ।


| श्लोकाद्याः | पृष्ठाङ्काः । |
|---|---|
| **अ.** | |
| अक्षतश्च लघुद्राक्षी | ८० |
| अग्निचित्कपिला राजा | १९ |
| अग्निरुष्णो जलं शीतम् | ४ |
| अग्निहोत्रं त्रयो वेदाः | २,५ |
| अङ्कनं नामकरणम् | ५३ |
| अङ्गनालिङ्गनाज्जन्य- | ३ |
| अज्ञातं विषयो ब्रह्म | १७० |
| अज्ञानस्याप्यधर्मस्य | ६१ |
| अज्ञो जन्तुरनीशोऽयम् | ६६ |
| अतत्त्वमिति वा छेदः | ५६ |
| अतिदूरात्सामीप्यात् | ५१ |
| अत्र चत्वारि भूतानि | २ |
| अत्र ब्रूमो य एवार्थो | १५४ |
| अत्रोच्यते द्वयी संवित् | १५७ |
| अथ तद्वचनेनैव | २२ |
| अथशब्दस्त्वत शब्दः | ५८ |
| अथात शब्दपूर्वाणि | ५८ |
| अध्रुवेण निमिषेन | ११५ |
| अनवद्यमूर्तं सर्व- | ३१ |
| अनन्तश्चैव सूक्ष्मश्च | ६९ |
| अनन्तरं च रजत- | १५५ |
| अनवच्छिन्नसद्भावम् | ६८ |
| अनात्मनि च देहादौ | १३१ |
| अनादानमदत्तस्या- | २६ |
| अनादिद्वेषिणो दैत्या- | ५३ |
| अनादिनिधनं ब्रह्म | १११ |
| अनादि भावरूपं यत् | ३७ |
| अनादेरागमस्यार्थो | २२ |
| अनाधेयफलत्वेन | १५१ |
| अनुकूलेन तर्केण | ९६ |
| अनेकान्तं जगत्सर्वम् | ३९ |
| अनेकान्तात्मकं वस्तु | ३४ |
| अन्योन्यपक्षप्रतिपक्षभावात् | ३४ |
| अपरोक्षावभासेन | १५६ |
| अपि प्रयत्नसंपन्नम् | १३५ |
| अप्रत्यक्षोपलम्भस्य | १२ |
| अभिमानोऽहंकारः | ११७ |
| अभ्रकस्तव बीजं तु | ७९ |
| अर्थानुपार्ज्य बहुशो | १८ |
| अर्थो ज्ञानान्वितो वैभा- | १९ |
| अर्थेन घटयत्येनाम् | १५ |
| अविद्यास्तमयो मोक्षः | १४६ |
| अविभागोऽपि बुद्ध्यात्मा | १३ |
| अवेद्यवेदकाकाराः | १३ |
| अभ्यासस्साधनो य. | ४ |
| अश्वस्यात्र हि शिश्नं तु | ५ |
| अष्टकर्मक्षयान्मोक्षो | ३५ |
| असदकरणादुपादानग्रहणात् | ११९ |
| असत्त्वान्नास्ति संबन्ध | ११९ |
| असर्वज्ञप्रणीतात्तु | ७२ |
| अहंधियाऽऽत्मनः सिद्धेः | १४७ |
| **आ.** | |
| आकारवांस्त्वं नियमादुपास्यो | ६७ |
| आकारसहिता बुद्धिः | १९ |
| आगमादेः प्रमाणत्वे | ९६ |
| आगमेनानुमानेन | ८३ |
| आत्मा यदि भवेन्मेय. | ६८ |
| आदावपेक्षाबुद्ध्या हि | ८७ |
| आदाविन्द्रियसंनिकर्षघटनात् | ८६ |
| आद्यानुग्रह शिवो | ६९ |
| आद्यावाच्यविवक्षायाम् | ३३ |
| आयतनं विद्याना | ८२ |
| आरुरुक्षोर्मुनेर्योगम् | १३३ |
| आर्द्रत्वं च घनत्वं च | ८० |
| आसनादीनि सवीक्ष्य | ३१ |
| आसन्नं ब्रह्मणस्तस्य | ११० |
| आस्रवो भवहेतुः स्यात् | ३१ |

| श्लोकाद्या | पृष्ठाङ्का |
|---|---|
| आस्रव स्रोतसो द्वारम् | ३५ |
| आह नित्यपरोक्ष तु | ५५ |
| **इ** | |
| इत्थं तथा घटपद्य | ७६ |
| इति गुह्यतम शास्त्रम् | ५४ |
| इति धनशरीरभोगान् | ७९ |
| इति पाणिनिसूत्राणाम् | ११८ |
| इदमाकारवृत्त्यक्त | १६२ |
| इदमाद्य पदस्थानम् | ११६ |
| इद ज्ञानमुपाश्रित्य | ५३ |
| इद रजतमित्यत्र | १५४ |
| इद वस्तुबलायातम् | ११ |
| इह भोग्यभोगसाधन- | ६६ |
| **ई.** | |
| ईश्वरश्चिदचिच्चेति | ३७ |
| **उ** | |
| उत्तम पुरुषस्त्वन्य | ५४ |
| उत्पत्तिस्थितिसहारा | ५८ |
| उत्प्रेक्षेत हि यो मोहात् | १०३ |
| उपक्रमोपसहारौ | ५९, १४८ |
| उपदेशोऽपि बुद्धस्य | २३ |
| उपनीय तु य शिष्यम् | १०० |
| उपयन्नपयन्धर्मो | १२७ |
| उपाधिसनिधिप्राप्त | १५३ |
| उभयात्मकमत्र मन | ११८ |
| **ऊ** | |
| ऊर्ध्वं वह्निरधस्तोयम् | १२८ |
| **ऋ** | |
| ऋग्यजु सामाथर्वा च | ५८ |
| **ए.** | |
| एकवार प्रमाणेन | ७३ |
| एकाकिनी प्रतिज्ञा हि | ६ |
| एकाक्षरारद्दतो गते | १६२ |
| एकैकहानिस्तायादे | १२९ |
| एकोऽसौ रसरग | ८२ |
| एको ह्यनेकशक्तिर्दृक् | ७२ |
| एतेऽन्ये बहव सिद्धा | ७९ |
| एते यमा सनियमा | १२७ |
| एवमर्थापत्तिरपि | २३ |
| एवमुक्तो नारदेन | ५८ |
| एव गुणा समाना स्यु | ४६ |
| एव ह्यहरह श्रौत- | ४६ |
| एष चाऽऽनन्दशक्तित्वात् | ७६ |
| एष प्रमाता मायान्ध | ७७ |
| **ओ.** | |
| ओंकारश्चाथशब्दश्च | १२४ |
| **क.** | |
| कफमूत्रसमप्रायै | ३१ |
| करणेन नास्ति कृत्यम् | ७३ |
| कर्तरि ज्ञातारि स्वात्मन्यादिसिद्धे | ७५ |
| कर्ता न तावदिह कोऽपि यथेच्छया वा | २४ |
| कर्ताऽस्ति कश्चिज्जगत स चैक | २४ |
| कर्मण्येवाऽधिकारस्ते | १३५ |
| कर्मयोगेण देवर्षि | ७९ |
| कर्मादिनिरपेक्षस्तु | ६४ |
| कल्पनापोढमभ्रान्तम् | १८ |
| कथार्थस्तु तयोर्विद्वन् | ५८ |
| काश्चिदनुपत्य वितरति | ७० |
| कामतोऽकामतो वाऽपि | १३५ |
| कार्यकारणभावाद्वा | ५ |
| कालत्रये ज्ञातृकाले | १६३ |
| काश्यादिसर्वलिङ्गेभ्य | ८२ |
| किंतु मोहवशादस्मिन् | ७५ |
| किण्वादिभ्य समेतेभ्य | ३ |
| कुसुमे बीजपूरादे- | २० |
| कृतप्रणाशाकृतकर्मभोग- | २१ |
| कृत्ति कमण्डलुर्मौण्डयम् | १९ |
| केदारादीनि लिङ्गानि | ८२ |
| को ह्यन्य पुण्डरीकाक्षात् | १०१ |
| क्रमेणोभयवाञ्छायाम् | ३३ |
| क्षणिका सर्वसस्कारा | १९ |
| क्षीणाष्टकर्मणो मुक्ति | ३५ |
| **ग** | |
| गच्छतामिह जन्तूनाम् | ५ |
| गत्वा गत्वा निवर्तन्ते | ३२ |
| गर्भस्रोतानभेदन | १८ |

| श्लोकाद्या | पृष्ठाङ्का |
|---|---|
| गर्भद्रुतिबाह्यद्रुति— | ८० |
| गलितानल्पविकल्प | ८१ |
| गुणवृद्धिर्दैन्यवृद्धया | ८७ |
| गुरुभक्ति प्रसादश्च | ६१ |
| गुरुर्जनो गुह्यादेश | ६१ |
| गुणे द्रव्यव्यपेक्षे च | १५६ |
| गोविन्दभगवत्पादा– | ७९ |
| ग्रहणस्मरणे चेमे | १५६ |
| ग्राह्य वस्तु प्रमाण हि | १८ |
| **घ** | |
| घटोऽस्तीति न वक्तव्यम् | ३४ |
| घातयन्ति हि राजानो | ५२ |
| **च** | |
| चक्षुरादयुक्तविषयम् | ३ |
| चचल हि मन कृष्ण | १२९ |
| चिदचिद्द्वे परे तत्त्वे | २७ |
| चिन्ता प्रकृतसिद्धयर्थाम् | ९९ |
| चेतनालक्षणो जीव | ३५ |
| चैतन्य दृक्क्रियायुक्तम् | ६८ |
| **ज** | |
| जनन जीवनं चैव | १३४ |
| जातिमन्ये क्रियामाहु | ११४ |
| जीवाजीवौ पुण्यपापे | ३५ |
| जैमि देवादिशब्दो | ४१ |
| ज्ञातज्ञेयमिद विद्धि | ८१ |
| ज्ञानमात्रे वृथा शास्त्रम् | ६५ |
| ज्ञानाद्भिन्नो न नाभिन्नो | ९७ |
| ज्ञानेन्द्रियाणि पञ्चैव | १८ |
| ज्ञानं तपोऽग्र नित्यत्वम् | ६० |
| **त** | |
| ततश्च जावनोपाय | ५ |
| ततो भिन्ने अवुद्ध्वा च | ११६ |
| ततो स्वाभाविका पुसाम् | ४६ |
| तत्र ज्ञान स्वत सिद्धम् | ७५ |
| तत्र तन्मात्रधर्मेयम् | १५७ |
| तत्राद्यो मलमात्रेण | ६९ |
| तत्राद्यौ मण्डलिन | ७१ |
| तत्त्वाभ्या भूतलाभ्या स्यात् | १३९ |
| तात्स्यादालयविज्ञानम् | १५ |
| तथा कृतव्यवस्थेयम् | १३ |
| तथाऽपि भिन्ने नाऽऽभाति | १५६ |
| तदद्वैतश्रुतेस्तावत् | १६८ |
| तदंशेन विना नास्ति | ७५ |
| तद्रूपप्रत्ययैकाग्र्या | १४० |
| तद्वारमपवर्गस्य | ११६ |
| तद्वपु पञ्चभिर्मन्त्रै- | ६७ |
| तद्विधानविवक्षायाम् | ३३ |
| तदर्चाविभवव्यूह– | ४६ |
| तदर्थं लीलया स्वीया | ४४ |
| तदेव वासुदेवाख्यम् | ४५ |
| तन्मात्रविषया बाऽपि | १५७ |
| तमद्भुत बालकमम्बुजेक्षणम् | ८२ |
| तरत्वविद्या विततम् | १६६ |
| तर्पण दीपन शुचि | १३४ |
| तस्माद्गुणेभ्यो दोषाणाम् | १०६ |
| तस्माच्चक्रविभागेन | ११५ |
| तस्मात्सद्बोधकत्वेन | १०६ |
| तस्मिन्नाधाय मन | ८३ |
| तस्मिन्प्रसन्ने किमिहास्त्यलभ्यम् | ५५ |
| तस्मिन्सतीदमस्तीति | ७६ |
| तस्य प्रसाधनविधौ | ८० |
| तात्त्विक ब्रह्मण सत्त्वम् | १६३ |
| ता प्रातिपदिकार्थं च | ११४ |
| तारमायारमायोगो | १३५ |
| तारव्योमाग्निमनुयुक् | १३५ |
| तासामह वरा शक्ति | ७२ |
| तृतीये कोपसंतापौ | १३९ |
| तेन मायासहस्र तत् | ४८ |
| तेनान्यस्यान्यथा भास | १५४ |
| तेषा सततयुक्तानाम् | ४७ |
| तैस्तैरप्युपयाचितैरुपनत | ७८ |
| त्याज्य सुख विषयसगमजन्म पुसाम् | २ |
| त्रयो वेदस्य कर्तारो | ५ |
| त्रिगुणो द्विगुणो वायु | १३९ |
| त्रिपदार्थं चतुष्पादम् | ६५ |
| त्व पुरा सागरोत्पन्नो | ५२ |
| **द** | |
| दक्षिणे तु करे विप्रो | ५२ |

| श्लोकाद्या. | पृष्ठाङ्का |
|---|---|
| दर्शनात्स्पर्शनात्तस्य | ८२ |
| दह्यन्ते ध्मायमानानाम् | १२९ |
| दाता भोगपर. समग्रविभवो | १७० |
| दिव्यौदरिककामानाम् | २६ |
| दु खमायतनं चैव | १८ |
| दु खं संसारिण स्कन्धाः | १८ |
| दृष्टैवन्सुतोत्पत्ते | १५२ |
| दृष्टमनुमानमाप्त- | ११८ |
| देवा. केचिन्महेशाद्या' | ७९ |
| देवो मनुष्यो यक्षो वा | ४१ |
| देशना लोकनाथानाम् | १८ |
| देह. स्थौल्यादियोगाच | ३ |
| देहात्मप्रत्ययो यद्वत् | १४६ |
| दोषेण कर्मणा वाऽपि | १५३ |
| द्रव्यं काल क्रिया मूर्तिः | ६१ |
| द्रव्यं नानादशावत् | ४३ |
| द्रव्याद्रव्यप्रभेदाग्मितमुभयविधम् | ४३ |
| द्वाविमौ पुरुषौ लोके | ५४ |
| द्विचत्वारिंशता भिक्षा- | ३१ |
| द्वित्वाख्यगुणधीकाले | ८७ |
| द्वित्वे च पाकजोत्पत्तौ | ८६ |
| द्विधा कैश्चित्पद भिन्नम् | १११ |
| **ध** | |
| धर्मस्य तदतद्रूप- | ५७ |
| धीधना याधनायास्या- | १६८ |
| **न.** | |
| न चाऽऽगमविधि. कश्चित् | २२ |
| न चान्यार्थप्रधानैस्तैः | २२ |
| न द्वयोःस्ति तादात्म्यम् | १७० |
| नन्वत्र रजताभास | १५५ |
| न प्रकाश्य प्रमाणेन | १५१ |
| न यत्प्रमादयोगेन | २६ |
| न याति न च तत्राऽऽसीत् | १० |
| न सत. कारणापेक्षा | ११ |
| न स्वर्गो नापवर्गो वा | ४ |
| न ह्यसंनिहितं तावत् | १५५ |
| न हि कश्चित्क्षणमपि | १२३ |
| नाकमिष्टसुखं यान्ति | ११० |
| नादैराहितबीजायाम् | ११३ |
| नानावर्णो भवेत्सूतो | ८० |
| नान्यदृष्टं स्मरत्यन्य' | १४६ |
| नान्योऽनुभाव्यो बुद्ध्याऽस्ति | १२ |
| नामधात्वर्थयोगे तु | १३१ |
| नासतो विद्यते भावो | ११९ |
| नित्यज्ञानाश्रय वन्दे | १ |
| निपाताश्चोपसर्गाश्च | १२७ |
| निरुपादानसंभार- | ७७ |
| निरूढा लक्षणाः काश्चित् | १३६ |
| नीचाना वसतौ तदीयतनयै. | १७० |
| नीलिमेव वियत्येषा | १५३ |
| न्यस्यान्त स्थपृथिव्यादि- | १३८ |
| न्यायानामेकनिष्ठानाम् | ३४ |
| **प.** | |
| पञ्चकास्त्वष्ट विज्ञेया | ६० |
| पञ्चविधं तत्करयम् | ६८ |
| पञ्चेन्द्रियाणि शब्दाद्या. | १८ |
| पतिविद्ये तथाऽविद्या | ५३ |
| परमानन्दैकरसम् | ८३ |
| परस्परविरोधे हि | ७ |
| परिच्छेदान्तरायोऽयम् | १४ |
| परिपक्वमलानेतान् | ७१ |
| परिव्राट्कामुकशुनाम् | १२ |
| परिशेषात्स्मृतिरिति | १५५ |
| पर्यायाणा प्रयोगो हि | ११४ |
| पशवस्त्रिविधा प्रोक्ता. | ६१ |
| पशुयेनिहत. स्वर्गम् | ५ |
| पादाङ्गुष्ठौ निबध्नीयात् | ११७ |
| पारदो गदितो यस्मात् | ७८ |
| पारं गतं सकलदर्शनसागराणाम् | १ |
| पाशान्ते शिवताश्रुते. | ६८ |
| पीतशङ्खावबोधे हि | १५६ |
| पुत्रोत्पत्तिविपत्तिभ्याम् | १५९ |
| पुर स्थिते प्रमेयाब्धौ | १७ |
| पुरुष स पर पार्थ | ४८ |
| पुरुषस्य दर्शनार्थम् | १२१ |
| पूर्वपूर्वोदितोपाधि- | ४६ |

| श्लोकाद्याः | पृष्ठाङ्काः |
| --- | --- |
| यत्र द्रष्टा च दृश्यं च | ११६ |
| यत्राप्यतिशयो दृष्टः | १०२ |
| यत्रासौ विद्यते भावः | १० |
| यत्सत्तत्क्षणिकं यथा जलधरः | १० |
| यथाऽनादिर्मलस्तस्य | ७२ |
| यथा लोहे तथा देहे | ८० |
| यथावस्थिततत्त्वानाम् | २५ |
| यथा स्वप्नप्रपञ्चोऽयम् | ११६ |
| यदन्तर्ज्ञेयतत्त्वं तत् | १४ |
| यदा चर्मवदाकाशम् | ८३ |
| यदि गच्छेत्परं लोकम् | ५ |
| यदि चार्थं परित्यज्य | १५४ |
| यद्योभयोः समो दोषः | १६० |
| यस्मात्क्षरमतीतोऽहम् | ५४ |
| यस्मिन्नेव हि संताने | २० |
| यस्य घ्राण्युदितानि वेदवचने | ५९ |
| यस्यानवयवः स्फोटो | ११२ |
| य. स्यात्प्रावरणाविमोचनधियाम् | ८३ |
| या चैषां प्रतिभा तत्तत् | ७५ |
| यावज्जीवेत्सुखं जीवेत् | ५ |
| यावज्जीवं सुखं जीवेत् | १ |
| यावन्तो यादृशा ये च | ११२ |
| ये चाल्पकशरीरा | ७९ |
| योगिनामपि मूर्द्वीजे | ७६ |
| यो मामेवमसंमूढो | ५४ |
| **र.** | |
| रहस्य दर्शयित्वा | १२१ |
| रजतं विषयीकृत्य | १५५ |
| रसाङ्कमेयमार्गौको | ८५ |
| रागादिज्ञानसंतान- | १९ |
| रागादीनां गणो यस्मात् | १९ |
| रुचिर्मिनोक्तत्त्वेषु | २५ |
| रुद्रकीलितविच्छिन्न- | १३५ |
| **ल.** | |
| लब्धानन्तचतुष्कस्य | ३५ |
| लभ्यमाने फले दृष्टे | ९९ |
| लाभा मता उपायाय | ६० |
| लुञ्चिताः पिच्छिकाहस्ताः | ३५ |
| लोकसिद्धो भवेद्राजा | ३ |
| लोकातिवाहिते मार्गे | ३१ |
| लोकावगतसामर्थ्य- | १६७ |
| लोहवेधस्त्वया देव | ८० |
| लौकिकव्यवहारेषु | १०८ |
| लौकिकेन प्रमाणेन | १६३ |
| **व.** | |
| वत्सविवृद्धिनिमित्तम् | १२० |
| वर्षातपाभ्यां किं व्योम्नः | ८ |
| वश्यता परमा तेन | १४० |
| वसुधाद्यस्तत्त्वगणः | ७० |
| वाक्येष्वनेकान्तद्योती | ३३ |
| वाच्या सा सर्वशब्दानाम् | ११६ |
| वायोर्वह्नेरपां पृथ्व्या | १३८ |
| वारिवर्जित विधिवत् | १३५ |
| वासचर्या जपो ध्यानम् | ६० |
| वासुदेवः परं ब्रह्म | ४४ |
| वासुदेवः स्वभक्तेषु | ४४ |
| विकारापगमे सत्यम् | ११६ |
| विज्ञानाकलनामेको | ६९ |
| विज्ञानं स्वपराभासि | २५ |
| विधिनोक्तेन मार्गेण | १३३ |
| विनाऽपि विधिना दृष्ट- | ९८ |
| विभवोपासने पश्चात् | ४५ |
| विलिख्य मन्त्रवर्णांस्तु | १३४ |
| विवर्तस्तु प्रपञ्चोऽयम् | १४५ |
| विवादाध्यासितं सर्वम् | ६७ |
| वृद्धप्रयोगगम्यो हि | १३१ |
| वेदस्याध्ययनं सर्वम् | १०१ |
| वेदाश्रो वैदिकाः शब्दाः | १०९ |
| वैदिकेन प्रमाणेन | १६३ |
| व्यक्ताऽव्यक्ता यया दानम् | ६१ |
| व्यवहारोऽपि तत्तुल्यः | १५६ |
| व्याघातावधिराशङ्का | ६ |
| व्यावर्त्याभाववत्त्वेव | १६१ |
| व्यावर्तयितुमुपात्ता- | ४ |
| **श.** | |
| शक्तिरूपेण कार्याणि | ७२ |
| शब्दस्येन्द्रियदोषेण | १५६ |

| श्रुतयः | पृष्ठाङ्काः |
|---|---|
| **ह.** | |
| हास्यलोभभयक्रोध- | २६ |
| हिरण्यगर्भो योगस्य | १२५ |
| हिंसा रत्यरती राग- | ३५ |
| हेयं हि कर्तृरागादि | ९७ |

## श्रुतयः

| श्रुतयः | पृष्ठाङ्काः |
|---|---|
| अक्ताः शर्करा उपदधाति | ९९ |
| अजामेकां लोहितशुक्लकृष्णाम् | १२० |
| अणुरात्मा चेतसा वेदितव्यः | ४४ |
| अनहृतनृतं तदासो | ५२ |
| अत्रायं पुरुषः स्वयंज्योतिर्भवति | २९ |
| अथ यो वेदेदं जिघ्राणीति | ३९ |
| अध्यात्मयोगाधिगमेन देवम् | १२४ |
| अनुविद्य विजानाति | ४७ |
| अनृतेन हि प्रत्यूढाः | ३९ |
| अन्धं तमः प्रविशन्ति | ४६ |
| अन्धो मणिमविन्दत् | १४२ |
| असौ वा आदित्यो देवमधु | १४३ |
| अहमात्मा ब्रह्म | १४६ |
| **आ.** | |
| आत्मनस्तु कामाय सर्वं प्रियं भवति | ९३ |
| आत्मलाभान्न परं विद्यते | १७० |
| आत्मा वा अरे द्रष्टव्यः | ४७, ४७, १४५ |
| आत्मेत्येवोपासीत | ४७ |
| आदित्यो यूपः | १६७ |
| आराममात्रः पुरुषः | ४४ |
| **ऋ.** | |
| ऋचः सामानि जज्ञिरे | १०१ |
| ऋतं पिबन्तौ | ४० |
| **ए.** | |
| एष एव रुद्रो न द्वितीयोऽवतस्थे | ९६ |
| एकमेवाद्वितीयम् | ३७ |
| एष हि द्रष्टा स्प्रष्टा श्रोता | ३९ |

| श्रुतयः | पृष्ठाङ्काः |
|---|---|
| **ऐ.** | |
| ऐतदात्म्यमिदं सर्वम् | १४८ |
| **क.** | |
| कामः संकल्पो विचिकित्सा | १९८ |
| **च.** | |
| चक्रे बिभर्ति पुरुषोऽमितमम् | ५२ |
| चत्वारि शृङ्गा त्रयो अस्य पादाः | ११० |
| चौरापहार्यो च यथा | ५६ |
| **ज.** | |
| जीवस्य परमैक्यं च | ५५ |
| जीवेश्वरभिदा चैव | ५४ |
| ज्योतिष्टोमेन स्वर्गकामो यजेत | १०७ |
| **त.** | |
| तत्त्वमसि ३७, ५५, १४६, १४८, १५०, १७० | |
| तत्सत्यं स आत्मा | १४८, १६८ |
| तथाऽपि सूक्ष्मरूपत्वात् | ९९ |
| तदैक्षत बहु स्यां प्रजायेय | ४० |
| तद्विष्णोः परमं पदम् | ९२ |
| तमेव भान्तमनुभाति सर्वम् | ९५ |
| तरति शोकमात्मवित् | ३७ |
| तदन्वेष्टव्यः | १०० |
| तस्माच्छान्तो दान्त उपरतस्तितिक्षुः | १९३ |
| तं त्वौपनिषदम् | ९८ |
| **द.** | |
| देवासो येन विधृतेन बाहुना | ५२ |
| द्वा सुपर्णा सयुजा सखाया | ४१ |
| द्वैतं न विद्यते इति | ५४ |
| धर्मार्थकामाः सर्वेऽपि | ५५ |
| धर्मेण पापमपनुदति | १६९ |
| **न.** | |
| न च नाशं प्रयात्येव | ५४ |
| न जायते म्रियते वा | ४१ |
| न स्वरूपैकता तस्य | ९५ |
| न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते | ३९ |
| नायमात्मा प्रवचनेन लभ्यः | ४७ |
| नायमात्मा बलहीनेन लभ्यः | ४८ |
| नावेदविन्मनुते तं बृहन्तम् | ९८ |
| निष्कलं निष्क्रियं शान्तम् | १६६ |

श्रुतयः — पृष्ठाङ्काः

प.

परीक्ष्य लोकान्कर्मचितान् ४६

ब.

बळित्था तद्वपुषे धायि ५९
बालाग्रशतभागस्य ४४
बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रम् १०९

भ.

भिद्यते हृदयग्रन्थिः ४७
भूयश्चान्ते विश्वमायानिवृत्तिः १६६

म.

मायां तु प्रकृतिं विद्यात् ४०
मिथश्च जडभेदो यः ५४
मुक्तानां चाऽऽश्रयो विष्णुः ५६
मृत्योः स मृत्युमाप्नोति ३७

य.

य आत्मनि तिष्ठन् ४१, ४४
य एतं ब्रह्मलोकम् ४०
यजमानः प्रस्तरः १६७
यतो वा इमानि भूतानि ४९, ५८
यतो वाचो निवर्तन्ते १५१, १५१
यथा पक्षी च सूत्रं च ५६
यदग्ने रोहितं रूपम् १४३
यस्य प्रसादात्परमार्तिरूपाद ५५
योऽयं विज्ञानमयः प्राणेषु ३९

र.

रसो वै सः । रसं ह्येवायम् ८३

व.

विज्ञानघन एवैतेभ्यो भूतेभ्यः १
विज्ञाय प्रज्ञां कुर्वीत ४७
विद्यां चाविद्यां च ४६
विष्णुं सर्वगुणैः पूर्णम्

श.

शं नो देवीरभिष्टये

स.

स आत्मा तत्त्वमसि
सत्य आत्मा सत्यो जीवः सत्यं
सत्यं ज्ञानमनन्तं ब्रह्म
सत्यमेनमनु विश्वे मदन्ति

सूत्राणि — पृष्ठाङ्काः

सत्यः सो अस्य महिमा गृणे ५३
सदेव सोम्येदमग्र आसीत् ३७, १४८
स यथा सैन्धवघनोऽनन्तरोऽबाह्यः ३९
सहस्रशीर्षा पुरुषः ८१
सोऽपहतपाप्मा विजरः ४४
स्वातन्त्र्यशक्तिविज्ञान- ५६
स्वाध्यायोऽध्येतव्यः ९८

ह.

हिरण्यगर्भो योगस्य ( स्मृ ) १२५

---

## सूत्राणि ।

अ.

अचोऽञ्णिति १३२
अथ योगानुशासनम् १२२, १२३, १२५
अथातो ब्रह्मजिज्ञासा ४५, ५७, १२४, १२६, १४५
अथातो धर्मजिज्ञासा ९७
अथातो धर्मं व्याख्यास्यामः ८३
अथात पशुपतेः पाशुपतयोगविधिम् ६०
अनित्याशुचिदु खानात्मसु १३१
अनुस्नाननिर्माल्यलिङ्गधारी ६३
अपरिणामिनि हि भोक्तृशक्तिः १२२
अप्रकाशितप्रकाशव्यवहार. १६६
अभ्यासवैराग्याभ्याम् १३३
अर्हे कृत्यतृचश्च १५२
अविद्या क्षेत्रमुत्तरेषाम् १३०
अविद्यास्मितारागद्वेषाभिनिवेशाः १३०
अशुभ. पापस्य २९
अष्टवर्षं ब्राह्मणमुपनयीत ९९
अहिंसासत्यास्तेयब्रह्मचर्या- १३६

आ.

| सूत्राणि | पृष्ठाङ्काः |
|---|---|
| **उ.** | |
| उत्पादाद्वा तथा— | १६ |
| उत्पादव्ययध्रौव्ययुक्तं सत् | २० |
| उभयपरिकर्मितस्वान्तस्य | ४८ |
| उभयप्राप्तौ कर्मणि | १०७ |
| **ऋ.** | |
| ऋतंभरा तत्र प्रज्ञा | १४१ |
| **ए.** | |
| एवं त्रिचतुरज्ञानजन्म- | १६८ |
| **औ.** | |
| औदारिकादिकार्यादि- | २९ |
| औपशमिकक्षायिकौ भावौ | २७ |
| **क.** | |
| कथंचिदासाद्य महेश्वरः स्यात् | ७३ |
| कर्तृकर्मणोः कृति | १०८ |
| कर्मणि च | १०७ |
| कर्मण्यण् | १०९ |
| क्लेशकर्मविपाकाशयपरिपन्थि | १३० |
| क्वचिद्भेदसंघाताभ्यां स्कन्धोत्पत्तिः | २८ |
| **ग.** | |
| गुणपर्यायवद्द्रव्यम् | २८ |
| **च.** | |
| चिदचिदीश्वरभेदेन | ३७ |
| चैतन्यमात्मा | ७६ |
| चोदनालक्षणोऽर्थो धर्मः | ९७ |
| **ज.** | |
| जन्माद्यस्य यतः | ४८, ५८, १५०, १७१ |
| जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः | १२२ |
| जात्याख्यायामेकस्मिन् | ११५ |
| जीवाजीवौ पुण्यपापयुतौ | ३३ |
| जीवाजीवास्रवबन्ध- | २९ |
| **त.** | |
| तत्तु समन्वयात् | ४९, ५७, ५९, १७१ |
| तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् | २५ |
| तत्र स्थितौ यत्नोऽभ्यासः | १३३ |
| तत्र प्रत्ययैकतानता ध्यानम् | १४० |
| तथा प्रवृत्तिहेतुत्वाच्च | ९२ |
| तदनन्तरमूर्ध्वम् | ३२ |
| तद्भेदं च समगृह्णात् | ३० |
| तपःस्वाध्यायेश्वरप्रणिधानानि | १२२, १३३ |
| तल्लब्धिर्विवेकविमोकाभ्याम् | ४८ |
| तस्मिन्सति श्वासप्रश्वासयोः | १३७ |
| तस्य भावस्त्वतलौ | ११४ |
| तेन प्रोक्तम् | १०२ |
| **द.** | |
| दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानाम् | ९३ |
| दुःखानुशयी द्वेषः | १३२ |
| दृग्दर्शनशक्त्योरेकात्म- | १३२ |
| दृष्टानुश्रविकविषयवितृष्णस्य | १३३ |
| देशबन्धश्चित्तस्य धारणा | १२२, १४० |
| द्रव्यगुणकर्मनिष्पत्ति- | ८९ |
| द्रव्याश्रया निर्गुणा गुणाः | २९ |
| **न.** | |
| नानात्मानो व्यवस्थातः | ४३ |
| नित्यमनित्यभावात् | ५७ |
| नैकस्मिन्नसंभवात् | ३७ |
| **प.** | |
| परिणामतापसंस्कारदुःखैः | १३१ |
| पाशाश्चतुर्विधाः स्युः | ७९ |
| पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः | १४१ |
| पूर्वप्रयोगादसङ्गत्वात् | ३२ |
| प्रकरणादसंनिहितत्वाच्च | ५३ |
| प्रकृतिरित्यनुभव- | ३० |
| प्रमाणप्रमेय- | ९० |
| प्रयत्नायौगपद्याज्ज्ञानयौगपद्यात् | १५५ |
| **ब.** | |
| बन्धहेत्वभाव- | ३३ |
| **भ.** | |
| भस्मना त्रिषवणं स्नायीत | ६३ |
| **म.** | |
| मतिश्रुतावधिमनः- | २५ |
| मनोजवित्वं विकरणभावः | १४१ |

| सूत्राणि | पृष्ठाङ्का |
|---|---|
| मन्त्रायुर्वेदप्रामाण्यवच्च | ९० |
| मिथ्यादर्शनाविरति | ३० |
| **य** | |
| यथाऽऽगोमहिष्यादि- | ३० |
| यथा स स्वर्गं सर्वान्प्रत्यवि- | ९८ |
| यमनियमासनप्राणायाम- | १२७ |
| यमर्थमधिकृत्य प्रवर्तते | ७४ |
| योगश्चित्तवृत्तिनिरोध | १२२, १२७ |
| **व.** | |
| वितर्कविचारानन्दास्मिता- | १३० |
| विरामप्रत्ययाभ्यासपूर्व | १४१ |
| विशोका वा ज्योतिष्मती | १४१ |
| वीतरागजन्मादर्शनात् | ४४ |
| वृद्धिरादैच् | १२५ |
| व्याधिस्त्यानसंशयप्रमादालस्य- | १२९ |
| व्युत्पत्तिमात्राभिधित्सया | १२७ |
| **श** | |
| शास्त्रपूर्वके प्रयोगेऽभ्युदय | ११० |
| शास्त्रयोनित्वात् | ४९, ५८ १७१ |
| शौचसंतोषतपःस्वाध्यायेश्वरप्रणि- | १३७ |
| श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानाम् | १२६ |
| **स.** | |
| सकषायत्वाज्जीव | ३० |
| सत्त्वपुरुषान्यताख्यातिमात्रप्रतिष्ठस्य | १४१ |
| सदा ज्ञाताश्चित्तवृत्तय | १२८ |
| सरूपाणामेकशेष एकविभक्तौ | ११५ |
| समानतन्त्रसजनाचार्यकरण- | ९९ |
| सुखानुशयी राग | १३२ |
| सुप्यजातौ णिनिस्ताच्छील्ये | १३२ |
| सुप्तिङन्तं पदम् | ११२ |
| सोऽयं परमो न्यायो विप्रतिपन्न- | ९२ |
| स्पर्शरसगन्धवर्णवन्तः पुद्गलाः | २८ |
| स्वरसवाही विदुषोऽपि | १३२ |
| स्वविषयासंप्रयोगे चित्तस्व | १३९ |
| स्यादस्ति स्यान्नास्ति | ३३ |
| **ह** | |
| हसितगीतनृत्यहुङ्कार- | ६३ |

| भाष्याणि | पृष्ठाङ्का |
|---|---|
| **भाष्याणि.** | |
| **अ.** | |
| अथ गौरित्यत्र कः शब्दः | ११२ |
| अथ शब्दानुशासनम् | १०७, १०८, १०९, १२५ |
| अथेत्ययमधिकारार्थः प्रयुज्यते | १२५ |
| **इ.** | |
| इतिकरणो विवक्षार्थः सर्वेनाभिसंबध्यते | १३५ |
| **ए.** | |
| एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः | ११० |
| **च.** | |
| चत्वारि शृङ्गाणि चत्वारि पदजातानि | ११० |
| **ज.** | |
| ज्ञातसंबन्धस्यैव पुंसो लिङ्गवि- | १५९ |
| **न.** | |
| निर्दिश्यमानप्रतिनिर्दिश्यमानयोः (कं) | १३६ |
| निष्कारणो धर्मः षडङ्गो वेदोऽध्येतव्य | १०८ |
| **प.** | |
| पश्वादिभिश्चाविशेषात् | १४९ |
| पुर्यष्टकं नाम प्रतिपुरुषम् | ७० |
| **म.** | |
| मङ्गलादीनि मङ्गलमध्यानि | १२४ |
| **य.** | |
| यथोभयोः समानो दोषः | १६० |
| यदेव परदर्शनं सैवाविद्या | १६६ |
| योगः समाधिः | १२७ |
| योगानुशासनं शास्त्रं वेदितव्यम् | १२५ |
| **र.** | |
| रक्षोहागमलघ्वसंदेहाः प्रयोजनम् | ११० |
| **व.** | |
| व्यावहारिकीं प्रमाणसत्तामादाय | १६८ |

ग्रन्थनामानि पृष्ठाङ्का

१२९, १३०, १३०, १३०,१३१, १३१, १३२, १३२, १३२, १३२, १३२,१३३, १३३, १३३, १३३, १३६, १३७,१३७, १३९, १४०, १४०, १४१, १४१, १४१, १४१, १४१, १४२

प्रकरणपञ्चिका १५४,१५४, १५४, १५५,१५५, १५६, १५६, १५७, १५७

प्रकीर्णक १११

प्रबोधसिद्धि ५७

प्रमाणपारायणम् १५७

प्रमेयकमलमार्तण्ड २२

ब.

बहुदैवत्य ६९

बृहत्संहिता ५९

बृहदारण्यकम् २, ३९, ३९, ३९, ३९, ४१, ४४, ४६,४७, ४ , ४७, ४७, ५८, १२४, १२८, १४५, १४६

बोधिचित्तविवरणम् १८

बौद्धनय १८

ब्रह्मकाण्डम् १११

ब्रह्मसूत्रम् ३७ ४५, ४८, ४९ ४९, ५३, ५७, ५८, ५८, ५९, १२४, १२६, १४५, १५०, १७१, १७१, १७१

ब्रह्मसूत्रभाष्यम् १४९

भ.

भगवद्गीता ४७, ४७,४८, ४८, ५३ , ५४,११९, १२३, १२४, १२९, १३३

भागवतम् ८०

भाल्लवेयश्रुति ५५

भाष्यम् १६०

म.

मनुस्मृति १००

महानारायणोपनिषत् ११०, १६९

महाभारततात्पर्यनिर्णय ५२, ५९

महाभाष्यम् १०७, ११०, १११, ११२, १२४, १२५

महावराह ५५

महोपनिषत् ५६

ग्रन्थनामानि पृष्ठाङ्का.

माण्डूक्यकारिका ५३

मानमनोहर १०३

मीमांसाश्लोकवार्तिकम् ११२,१६८

मुण्डकम् ४३, ४४, ४६, ४७, ४८, ५३

र.

रसहृदयम् ७९, ८१,८३

रसार्णव ७८, ८०, ८२

रसेश्वरसिद्धान्त ७९,८१

व.

वाक्यपदीयम् १०८, ११०, १११,११२, ११३, ११६, ११६, १६८

विवरणम् १७१

विवरणाविवरणम् १६६

विवेकविलास ६८

विष्णुतत्त्वनिर्णय ५०,५९

विष्णुपुराणम् १४०,१४०

वीतरागस्तुति ३१, ३४, ३४

वेदार्थसंग्रह ४२

वैशेषिकसूत्रम् ४३,१५५

व्यासभाष्यम् १२५

व्यासभाष्यव्याख्या १३१

श.

शाकल्यसंहितापरिशिष्टम् ५३

शारदातिलक १३४

शिवदृष्टि ७३

शिवसूत्रम् ७६

श्रीपञ्चरात्रम् ४५

श्रीमत्करण ६८

श्रीमत्कालोत्तर ७०

श्रीमत्किरण ७२

श्रीमत्पौष्कर. ६७

श्रीमन्मृगेन्द्र ७१,७१

श्रीमत्सौरभेय ७२

श्वेताश्वतरोपनिषत् ४०,४३,४४,८१,१२०,१६६, १६६

स.

समानतन्त्र ६०

| ग्रन्थकारनामानि | पृष्ठाङ्काः |
|---|---|
| संबन्धसमुद्देशः | ११५,११६ |
| साकारसिद्धिः | ८१ |
| सांख्यकारिका | ५१, ११७, ११७, ११८, ११८, ११८, ११८, ११८,११९, १२०, १२१, १२१ |
| सिद्धान्तः | ३३ |
| स्कान्दम् | ५८ |
| स्याद्वादमञ्जरी | ३४ |
| स्वरूपसंबोधनम् | २७ |


## ग्रन्थकारनामानि।


**अ.**

अक्षपादः ७४
अघोरशिवाचार्यः ७०
अनन्तवीर्यः ३३
अभिनवगुप्ताचार्यः ७५,७८
अभियुक्तः ३१, ११६; १३८
अर्हत् २६

**आ.**

आचार्यः ३४,६५,८०,८६,१०३, १२२, १४७, १५०,१५०,१५०,१५९
आचार्यवाचस्पतेः ११८,१४४
आचार्यवाचस्पतिमिश्रः १६०
आनन्दतीर्थः ४६
आभाणकः २

**ई.**

ईश्वरकृष्णः ११७

**उ.**

उत्पलाचार्यः ७४
उदयकरसूनुः ७५
उदयनः ९६,१०३,१०५,१०६
उदयनाचार्यः ९०
उमास्वातिवाचकाचार्यः ३०

**औ.**

औपनिषदाः १५०

**क.**

कणादः ८९
कपिलादयः १२१
कल्पतरुकारः १६६
कात्यायनः ११०
कैयटः ११२,१३६

**ख.**

खण्डनकारः १६८

**ग.**

गर्भश्रीकान्तमिश्रः ८२
गुरुः १०२
गुरुमतानुसारिणः १५५
गोविन्दभगवत्पादाचार्य. ७९,८०
गौतमः ९०,११३

**च.**

चार्वाक. १
चित्सुखाचार्य. १५२,१६३

**ज.**

जिनदत्तसूरि. ३४
जैनः ३३,१५०
जैमिनि. ९७,१३४
ज्ञानश्री १०

**त.**

तथागतः ७
तन्त्रतत्त्वज्ञाः ६५
तौतातितः २२,११२
त्रैविद्यवृद्धः १००

**ध.**

धर्मकीर्तिः १२

**न.**

नकुलीशः ६३
नरेन्द्रगिरिश्रीचरणाः १६६
नारायणकण्ठः ७१
नीलकण्ठभारतीश्रीचरणा. १३५
नैयायिकादयः ८८, ११८, १५०
न्यायनिर्माणवेधा. ५७
न्यायभूषणकारः १०४

**प.**

पक्षिलस्वामी ९२
पद्मशिवः १३३

| ग्रन्थकारनामानि | पृष्ठाङ्का |
|---|---|
| पक्षशिखाचार्य | १२८ |
| पतञ्जलि | १०७, ११२, १२२, १२४, १२७, १२८, १३०, १३३, १३६, १४१ |
| पद्मनन्दि | ७७ |
| परीक्षक | ७३ |
| पाणिनि | ११२, ११५ |
| पूर्वाचार्य | १४८ |
| पौराणिक | १४० |
| प्रभाकर | १४३ |
| प्रभाचन्द्र | २२ |
| प्रशस्तपाद | १० |
| प्राभाकरमतानुसारिण | १५७ |
| प्राभाकरैकदशिन | ८८ |
| प्रामाणिक | ११३ |
| **फ.** | |
| फणिपति | १२१ |
| **ब.** | |
| बादरायण | १४५ |
| बौद्ध | ५, ७, १७, १५० |
| बृहस्पति | ४, ६६ |
| **भ.** | |
| भगवान् ११, ४७, ५४, १३३, १३४, १३५, १४१ | |
| भट्टाचार्य | ९६, १०७, ११२ १३२, १५१ |
| भट्टारक | ८० |
| भट्ट | ८८ |
| भामतीकार | १४९ |
| भाष्यकार | ४८, ११०, ११०, १११, ११५, १४९, १५३ |
| भास्कर | १६६ |
| भोजराज | ६८ |
| **म.** | |
| मध्यमन्दिर | ५२, ५९ |
| मनु | १०२ |
| महोपाध्यायवर्धमान | १०८ |
| माध्यमिक | ११ |
| **य.** | |
| याज्ञवल्क्य | १२६, १३३, १३७ |
| याज्ञिक | १०६ |
| यामुन | ३८ |
| योगदेव | २४ |
| **र.** | |
| रामकाण्ड | ७० |
| रामानुज | ३७ ४२, ४५ |
| रामेश्वर | ८० |
| **ल.** | |
| लोकायत | १५० |
| **व.** | |
| वसुगुप्ताचार्य | ७७ |
| वाक्यकार | ४८ |
| वागीश्वर | १०३ |
| वाचकाचार्य | १७, ३० |
| वाचस्पति | १२५ |
| वचस्पतिमिश्र | १३१, १३१ |
| विद्यानन्दादय | ३० |
| वृत्तिकार | ४५, ४६, १३२ |
| वेङ्कटनाथ | ४३ |
| वेदान्ती | ८८, ११८ |
| वेदान्तवादनिपुण | ११६ |
| व्यास | ७, १२७ |
| **श** | |
| शबरस्वामी | १५९ |
| शङ्करकिंकर | ९५ |
| शङ्कराचार्य | १२४, १४५ |
| शालिकनाथ | १५३ |
| श्रीधराचार्य | ८८ |
| श्रीमन्नृपेन्द्र | ६७, ६७, ६८ |
| **स** | |
| सर्वज्ञ | ८०, ९२ |
| सवतीर्थंकर | ११ |
| सद्गुरुसर्वज्ञविष्णुभट्टोपाध्याय | १६६ |
| सम्प्रदायविद् | ६४ |
| साङ्ख्य | ११७, ११८, १५१ |

| ग्रन्थकारनामानि | पृष्ठाङ्काः |
|---|---|
| सांख्याचार्यः | ११९ |
| सिद्धगुरुः | ६६ |
| सिद्धसेनवाक्यकारः | २० |
| सूत्रकारः | ६३, ६३, ९०, ९०, १३९ |
| सोमशंभुः | ६९ |
| सोमानन्दनाथपादाः | ७३, ७५ |
| सौगतः | ११८ |

| ग्रन्थकारनामानि | पृष्ठाङ्काः |
|---|---|
| स्वतःप्रामाण्यवादिनः | १०२ |
| **ह.** | |
| हरदत्ताचार्यः | ६० |
| हरिः | १०८, १११, ११३, ११४, ११६ |
| हेमचन्द्रसूरिः | २२ |
| हेमचन्द्राचार्यः | ३१ |
| हेलाराजः | १११ |


इति सर्वदर्शनसंग्रहान्तर्गतश्लोकश्रुतिसूत्रभाष्याद्यवाक्यग्रन्थनाम-
ग्रन्थकारनामानुक्रमणिका।

